यें अजुष्टाअसेवितास्ते संतीर्णैर्मुक्तैः समं व्याख्याताः । अतीर्णाअपि ते संसारं तीर्णाइव स्यु रित्यर्थः ॥ तस्मादूर्ध्वंमोक्षं यूयंपश्यत ये च कामान् रोगवत् रोगतुल्यान् अज्ञाकुर्द्दष्ट वंतस्तेपि तीर्णसमाइत्यपि पश्यत । यतः पुप्फफलाणं च रसं, सुराइमंसस्स महिलि आणं च ॥ जाणंतो जे विरया, ते डुक्करकारएवंदे ॥ २ ॥

---

॥ टीका—उक्तोद्दितीयोद्देशकः सांप्रतं तृतीयः समारन्यते ॥ अस्यचाऽयमन्निसंबंधः । इहाऽनंतरोद्देशकांते विरताइत्युक्तं तेषांच कदाचित्परीषहाः समुदीर्येरन्नतस्तत्सहनं विधेयमित्युद्देशार्थाधिकारोऽपि निर्युक्तिकारेणाऽनिहितः । यथाऽज्ञानोपचितस्य कर्मणोऽपचयोन्नवतीति सच परीषहसहनादेवेत्यतः परीषहाः सोढव्याइत्यनेन संबंधेनाऽऽयातस्याऽस्योद्देशकस्याऽदिसूत्रं । ( संवुमकम्मस्सेत्यादि ) । संवृतानि रुद्धानि कर्माण्यनुष्ठानानि सम्यगुपयोगरूपाणि वा मिथ्यादर्शनाविरतिप्रमादकषाययोगरूपाणि वा यस्य निक्षोः साधोः सतथा तस्य यत् डुःखमसद्वेद्यं तदपादानन्नूतं वाऽष्टप्रकारं कर्म । (स्पृष्टमिति) बद्धस्पृष्टनिकाचितमित्यर्थः । तच्चाऽत्राबोधिना अज्ञानेनोपचितं सत् संयमतोमौनींद्रोक्तात् सप्तदशरूपादनुष्ठानादपचीयते प्रतिक्षणं क्षयमुपयाति । एतडुक्तं नवति । यथा तटाकोदरसंस्थितमुदकं निरुद्धापरप्रवेशद्वारं सदादित्यकरसंपर्कात् प्रत्यहमपचीयते । एवं संवृताश्रवद्वारस्य निक्षोरिंद्रिययोगकषायं प्रति संलीनतया संवृतात्मनः सतः संयमानुष्ठानेन चाऽनेकन्नवाज्ञानोपचितं कर्म क्षीयते । ये च संवृतात्मानः सदनुष्ठायिनश्च ते हित्वा त्यक्त्वा मरणं मरणस्वन्नावमुपलक्षणत्वात् जातिजरामरणशोकादिकं त्यक्ता मोक्षं व्रजंति पंडिताः सदसद्विवेकिनः । यदि वा पंडिताः सर्वज्ञाएवं वदंति यत् प्रागुक्तमिति ॥ १ ॥ येऽपिच तेनैवं न्नवेन च मोक्षमाप्नुवंति तानधिकृत्याह । ( येविन्नवणेत्यादि ) ये महासत्वाः कामार्थिनिर्विज्ञाप्यंते यास्तदर्थिन्यो वा कामिनं विज्ञापयंति ताविज्ञापनाः स्त्रियस्तानिरजुष्टाअसेविताः क्षयं वा अवसायलक्षणमतीतास्ते संतीर्णैर्मुक्तैः समं व्याख्याताः । अतीर्णाअपि संतोयतस्ते निष्किंचनतया शब्दादिषु विषयेष्वप्रतिबद्धाः संसारोदन्वतस्तटोपांतवर्तिनोन्नवंति । ( तस्मादूर्ध्वमिति ) मोक्षं योषित्परित्यागादूर्ध्वं यन्नवति तत्पश्यत यूयं । येच कामान् रोगवद्व्याधिकल्पान् अज्ञाकुर्द्दष्टवंतस्ते संतीर्णसमाव्याख्याताः । तथाचोक्तं । पुप्फफलाणंचरसं, सुराइमंसस्समहलियाणंच ॥ जाणंताजेविरया, तेडुक्करकारएवंदे ॥ १ ॥ तृतीयपादस्य पाठांतरं वा । उड्ढंतिरियंअहेतहा. ऊर्ध्वमिति सौधर्मादिषु तिरियमिति तिर्यक्लोके अध इति न्नवनपत्यादौ येकामास्तान् रोगवदज्ञाकुर्यै ते तीर्णकल्पाव्याख्याताइति ॥ २ ॥

ह्यतीतिवाहः शाकटिकस्तेनाऽवहन् गौः प्रतोदादिना कृतः प्रेरितोपि अबलोविषमपथे गंतुमसमर्थः स्यात् सचांतशोमरणांतमपि यावत् अल्पस्यामाऽल्पसामर्थ्योनोजारं वोढुं शक्नोति एवंभूतश्चतत्रैव पंकादौविषीदति ॥ ५ ॥ दार्ष्टांतिकमाह । ( एवमिति ) । एवं पूर्वोक्तदृष्टांतेन कामानां शब्दादीनां या गवेषणा प्रार्थना तस्यां विद्वान् निपुणः कामप्रार्थनासक्तोऽद्य श्वोवा संस्तवं कामसंबंधं प्रजह्यात् । नवा बलीवर्दइव विषममार्गकामान त्यक्तुमलं । किंच नवैहिकामुष्मिकापायभीरुः कामी भूत्वा प्राप्तानपि कामान् कामयेताऽभिलपेत वैरस्वामी जंबूस्वामिनामादिवत् तथाक्षुल्लककुमारवत् कुतश्चिन्निमित्तात् । सुष्ठु गाइयं सुष्ठुवाइयं सुनेच्चिअंसामसुंदरि ॥ अणुपालिअदीहराइअं जसुमिणंते मापमायह । इत्यादि प्रतिबुद्धोलब्धानपि कामान् लब्धसमान् मन्यमानोनिस्पृहःस्यात् ॥ ६ ॥

---

॥ टीका–पुनरप्युपदेशांतरमधिकृत्याह (वाहेणेत्यादि) व्याधेन लुब्धकेन (जहावत्ति) यथा (गवत्ति) मृगादि. पशुर्विविधमनेकप्रकारेण कूटपाशादिना कृतः परवशीकृतः श्रमं वा ग्राहितः प्रणोदितोऽप्यबलोभवति जातश्रमत्वात् गंतुमसमर्थः । यदिवा वाह्यतीति वाहः शाकटिकस्तेन यथावदवहन् गौर्विविधं प्रतोदादिना कृतः प्रचोदितोऽप्यबलोविषमपदादौ गंतुमसमर्थोभवति । सचांऽतशोमरणांतमपि यावदल्पसामर्थ्याद्भाऽतीव वोढुं शक्नोति । एवंभूतश्चाऽवलोभारं वोढुमसमर्थस्तत्रैव पंकादौ विषीदतीति ॥ ५ ॥ दार्ष्टांतिकमाह (एवमित्यादि) एवमनंतरोक्तया नीत्या कामानां शब्दादीनां विषयाणां या गवेषणा प्रार्थना तस्यां कर्त्तव्यायां विद्वान् निपुणः कामप्रार्थनासक्तः शब्दादिपंके मग्नः सचैवंभूतोऽद्य श्वोवा संस्तवं परिचयं कामसंबंधं प्रजह्यात् । क्लिल्येवमध्यवसाय्येव सर्वदाऽवतिष्ठते।नच तान् कामान् अवलोबलीवर्दवत् विषमं मार्गं त्यक्तुमलं । किंच नचैहिकामुष्मिकापायदर्शितया कामी भूत्वोपपन्नानऽपि कामान् शब्दादिविषयान् वैरस्वामिजंबूनामादिवद्वा कामयेताभिलपेदिति । तथा क्षुल्लककुमारवत् कुतश्चिन्निमित्तात् । सुष्टुगाइयमित्यादिना प्रतिबद्धोलब्धानप्यप्राप्तानपि कामान् लब्धसमान् मन्यमानोमहासत्वतया तन्निस्पृहोभवेदिति ॥ ६ ॥

मापच्छ असाधुता भवे, अच्चेही अणुसास अप्पगं ॥ अहियंच असाहु सोयती, संथणाती परिदेवती बहु ॥ ७ ॥ इह जीवियमेव पासहा, तरुणे एव वाससयस्स तुट्टती ॥ इत्तरवासेय बुज्झह, गिद्धनरा कामेसु मुच्छिया ॥८॥

अर्थ–हवे शावास्ते कामभोगनो त्याग करवो ते कहेछे. मापच्छ के० रखे, पछी मरणकाले भवांतरने विषे ए कामभोगनी सेवाये करी असाधुताभवे के० असाधु

भाजनं एवं महाव्रतरत्नानामपि महासत्वाएव साधवोभाजनं नान्ये इति ॥३॥ किंच (जेइहेत्यादि) ये नरालघुप्रकृतयइहाऽस्मिन् मनुष्यलोके सातं सुखमनुगच्छंतीति सातानुगाः सुखशीलाऐहिकामुष्मिकाऽपायभीरवः समृद्धिरससातागौरवेष्वध्युपपन्नागृध्राः। तथा कामेषु इच्छामदनरूपेषु मूर्छिताः कामोत्कटतृष्णाः। कृपणोदीनोवराकःकइंद्रियैः पराजितस्तेन समास्तुल्यकामासेवने प्रगल्भिताधृष्टतां गताः। यदिवा किमनेन स्तोकेन दोषेणाऽसम्यक्प्रत्युपेक्षणादिरूपेणाऽस्मत्संयमस्य विराधनं भविष्यत्येवं प्रमादवंतः कर्तव्येष्ववसीदंतः समस्तमपि संयमं पटवन्मणिकुट्टिमवद्वा मलिनीकुर्वंति। एवंभूताश्च ते समाधिधर्मध्यानादिकमाख्यातं कथितमपि न जानंतीति ॥ ४ ॥

वाहेण जहा व विछए, अबले होइ गवं पचोइए॥ से अंतसो अप्पथामए नाइ वहइ अबले विसीयति ॥ ५ ॥ एवं कामेसणं विऊ अज्जसुए पयहेज्ज संथवं ॥ कामी कामेण कामए, लद्धेवावि अलद्धकएहई ॥ ६ ॥

अर्थ—वली उपदेशांतर कहेछे. जहाव के० जेम वाहेणके० व्याध एटले आहेडी ते मृगादिक पशुने विछएके० त्राशदेतो छतो ते गवंके० मृगादिक अबले होइके० बलरहित थाय. क्यांए जइ शकेनहीं. अथवा वाहेणके० गाडानो वाहक एटले सांधडीउं तेणे जेम विषम मार्गने विषे गवंके० बलदने पचोइतेके० पराणे प्रेरणा करी खेड्यो छतो बलरहित थायः पछी से के० ते बलदने अंतसो के० मरणांत सुधी जो कष्ट आपे तो पण अप्पथामए के० अल्प सामर्थ्यपणाने लीधे नाइवहइके० चाली नशके. अबलेविसीयति के० निर्बलपणाथी तेहिज कादवमां विषम मार्गे खूतो रहे ॥५॥ हवे ए दृष्टांत पुरुष साथे मेलवेछे' एवं के० ए पूर्वोक्त न्याये काम के० शब्दादिक विषय तेनी एसणं के० गवेषणा एटले प्रार्थना तेनेविषे विऊ के० निपुण आसक्त छतो ते पुरुष सिदाय परंतु कामभोगने छांमी नशके; कामभोगरूप कर्दमने विषे खुतो एवो छतो अज्जसुएके० आज अथवा काले संथवं के० ए कामभोगनो संबंध पयहेज्जके० छांमीश. एम चिंतवे; पण निर्बल बलदनी परें छांमी नशके एमजाणी संवेग आणीने कामी के० कामि पुरुषे कामेण के० कामभोग वांछवा नही वली कामएलद्धेवावि के० ते कामभोगने लाधा थका पण अलद्धकएहइ के० अणलाधा एटले अणपाम्या सरखा करे. कोइएक निमित्ते बुज्यो छतो जंबुस्वामि तथा वेरस्वामिनी पेरे निस्पृहीथाय. ॥ ६ ॥

---

॥ दीपिका—(वाहेणेति)। व्याधेन लुब्धकेन यथा(गवंति)। मृगादिपशुः विक्षतोविविधप्रकारेणक्षतः पीमितः प्रचोदितः श्रमं प्रापितः सन्नबलोगंतुमसमर्थः। अथवा वा

ऽत्यर्थं स्तनति सशब्दं निःश्वसिति । तथा परिदेवते विलपऽत्याक्रंदति । बव्हिति । हामातर्म्रियतइति त्राता नैवाऽस्ति सांप्रतं कश्चित् किंशरणं मेस्यादित्याह । डुष्कृतचरितस्य पापस्येत्येवमादीनि डुःखान्यऽसाधुकारिणः प्राप्नुवंतीत्यतोविषयानुषंगोन विधेयइत्येवमात्मनोऽनुशासनं कुर्विति संबंधनीयं ॥७॥ किंच (इहजीवियमेवेत्यादि) । इहाऽस्मिन् संसारे आस्तां तावदन्यज्जीवितमेव सकलसुखास्पदमनित्यताऽघ्रातं आवीचिमरणेन। प्रतिक्षणं विशरारुस्वनावं तथा सर्वायुःक्षयएव वा तरुणएव युवैव वर्षशतायुरप्युपक्रमतोध्यवसाननिमित्तादिरूपादायुपस्त्रुटयति प्रच्यवते । यदिवा सांप्रतं सुवव्हप्यायुर्वर्षशतं तच्च तदंते त्रुटयति । तच्च सागरोपमापेक्षया कतिपयनिमेषप्रायत्वात् इत्वरं वासकल्पं वर्तते स्तोकनिवासकल्पमित्येवं बुध्यध्वं यूयं । तथैवंनूतेऽप्यायुषि नराः पुरुषालघुप्रकृतयः कामेषु शब्दादिषु विषयेषु गृध्धाअध्युपपन्नामूर्छितास्तत्रैवाऽसक्तचेतसोनरकादियातनां स्थानमाप्नुवंतीति शेषः ॥ ८ ॥

जे इह आरंनिस्सया, आत्तदंमा एगंतलूसगा ॥ गंता ते पावलोगयं,
चिरायं आसुरियं दिसं ॥ए॥ एय संखय माहु जीवितं, तहविय बाल
जणो पगप्नई ॥ पच्चुप्पन्नेण कारियं, कोदठुं परलोकमागते ॥ १० ॥

अर्थ—जेइह के० जे आ मनुष्य लोकमांहे महामोहाकुलित पुरुष आरंन के० आरंन हिंसादिक सावद्यानुष्ठानने विषे निस्सिया के० निश्रित एटले आसक्तछे, ते पुरुष आत्तदंमा के० आत्माने दंमनार तथा एगंतलूसगा के० एकंत जीवना प्राणने लूसनार अथवा सद् अनुष्ठाननेलूसनार, गंताते पावलोगयं के० एवा पुरुष पापलोक एटले जे गतिमां पापकर्मना करनार जाय, ते गतिमां जशे किंबहुना चिरायं असुरियंदिसं के० चिरकाल सुधी नरकादिकना डुःख पामसे. यद्यपि ते अज्ञान कष्टने प्रनावे कदाचित् देवगति पामे तोपण असुरिगति एटले किल्बिषीयादिकनी गति पामे ॥ए॥ वली कहेछे एयसंखयमाहुजीवितं के० सर्वज्ञे एम कह्युंछे के, त्रुटयुं आयुष्य संधाय नही तहविय के० तोपण बालजणो के० बाल अज्ञानी लोक ते निर्विवेकी पणे पगप्नई के० धृष्टपणुं करेछे, ते कहेछे, कोइ एक पंमिते धर्मने विषे प्रेर्योछतो ते नरविवेकी पुरुष एम कहेछे के पच्चुप्पन्नेणकारियं के० अमारा प्रत्युत्पन्न जे वर्त्तमान सुख तेनी साथेज अमारो कार्य छे, कोणजाणे परलोकछे किंवा नथी कोदठुं परलोगमागते के० परलोकने कोण देखी आव्योछे, जे देखीने परलोकथी आव्यो होय ते अमोने कहेतो मान्य करीये इत्यादिक धृष्टपणानी वातो करे. ॥ १० ॥

॥ दीपिका—जेइहेति। ये केचन इह लोके आरंननिःश्रिताआरंनसंबध्धाआत्मानं दंडयं

थकी दुर्गति गमनरूप थाय. एवुं जाणी पोतानो आत्मा विषयना संग थकी अ के० दूर करे तथा अणुसासअप्पगं के० पोताना आत्माने शीखवे के, रे जीव अ कर्मने प्रमाणे तुं दुर्गतियें गयो थको दुःखी थईश तथा अहियंचके० अत्यंत अ के० असाधु कर्मने प्रमाणे सोयती के० शोचकरीश संथणती के० हे जीव तुज रमाधार्मियें पीड्यो थको गाढा आकरा शब्द करीश, तथा परिदेवइबहु के० घणा ाप करीश. हे माय? हुं मरुंछुं, आ वखत मने राखनार कोइ नथी इत्यादिक क आक्रंद करीश एवुं कहीने आत्माने शीखामण आपे. ॥७॥ वली इहके० आ सं नांहे धनधान्यादिक पदार्थ तो दूररह्या, पण जीवियमेव के० एकलुं जीवितव्य पणुज ह के० देखो तेएवुं तो असाश्वतुं छे के, क्षणेक्षणे विनाशशीलछे. कोइक तो तरुणएव तरुण पणेज विनाशपामे वाससतस्सतुट्टती के० चालता समयमां घणुतो शो व आयुष्यछे, तेपण छेहेडे त्रूटेछे जेमाटे ते आयुष्य सागरोपमनी अपेक्षायेतो मेषो प्रायें इत्तरवासेय के० इत्वर एटले अल्प वर्ष सरखुं थाय. एवुं जाणीने रे जीव ह के० बुजो के, एवीरीतनो आयुष्यनो भरोशो छता पण गिद्धनराकामेसुमुछियाके० क पुरुष गृद्धछता कामभोगने विषे मूर्छित रहेछे? तेनरकादिक पीडाने पामेछे ॥८॥

---

॥ दीपिका—( मापछेति पश्चान्मरणकाले भवांतरेवा मानुषंगादसाधुता कुगतिरूपा ावेत् माप्राप्नुयादित्यतोविषयेभ्यआत्मानमत्येहि त्याजय । तथा आत्मानमनुशास्तिं । यथा हेजीव असाधुरशुभकर्मकारी अधिकं दुर्गतौ गतः शोचति । सच परमाधार्मिकैः र्थ्यमानस्तिर्यक्षु क्षुदादिवेदनाग्रस्तः स्तनत्याक्रंदति परिदेवते विलपति बहूपि इत्या नुशासनंकुरु ॥ ७ ॥ ( इहेति ) इह संसारे आस्तांतावदन्यत् । जीवितमायुरेवाऽनि पश्यत प्रतिक्षणमावीचीमरणसद्भावात् । तथा सर्वायुःक्षयात्तरुणएव त्रुटयति च्यव अथवा सांप्रतं सुबह्वप्यायुर्वर्षशतं तच्च सागरोपमापेक्षया कतिपयमेषोन्मेषप्रायत्वा त्वरवासकल्पं स्तोकवासतुल्यमिति बुध्यध्वं । एवंभूतेप्यायुषि गृद्धानराः कामे मूर्छिताश्चा ानरकादिपीडां लभंतइति शेषः ॥ ८ ॥

---

॥ टीका—किमिति कामपरित्यागोविधेयइत्याशंक्याह । (मापछेत्यादि ) मापश्चान्मरण ले भवांतरेवा कामानुषंगादसाधुता कुगतिगमनादिकरूपा भवेत् प्राप्नुयादिति । अतो ायासंगादात्मानमत्येहि त्याजय । तथात्मानं चाऽनुशाध्यात्मनोऽनुशास्तिं कुरु । यथा ीव योह्यसाधुरसाधुकर्मकारी हिंसानृतस्तेयादौ प्रवृत्तः सन् दुर्गतोपतितोऽधिक र्थमेवं शोचति सच परमाधार्मिकैः कदर्थ्यमानस्तिर्यक्षु वा क्षुधादिवेदनाग्रस्तो

अर्थ–हवे एवुं धृष्टपणुं करे तेने उपदेश कहेछे, अहो अदक्कुव के० अंध सरखा पुरुषो दक्कुव के० त्रणभुवननो देखनार एवो सर्वज्ञजे श्रीवीतरागदेव तेनो आहियंके० कहेलो जे श्रीसिद्धांत तेने सद्दहसु के० सर्द्दहे, तुं केवोछे ? तोके, अदक्कुदंसणा के० अंध ज्ञानदृष्टीरहित एवाजे छे, तेमना दर्शनने विषे प्रवर्त्तनहारछे माटे तने बोलावियें छैयें के अहो ? अदक्कुदंसणा तुं श्रीवीतराग परमात्मानोभाष्युंजे सिद्धांत तेनाउपर श्रद्धाकरीने हंदि के० तेने गृहणकर अने आलोकना सुखटालीने परलोक उपर कोण भरोशो राखे, परलोकतो नथी इत्यादिकजे तुं बोलेछे, ते ताहारुं बोलवुं अयोग्यछे; केमके वर्त्तमानकाल टालीने अतीत अनागत नही मानीश तो पितामहादिक पुत्रपौत्रादिक एपण नथी, एम पण कहेवुंपडशे परंतु एवीरीतना ताहारा बोलवा थकी एम जाणीयें छैयें जे सु के० सुठु पणे तुं निरुद्धदंसणे के० निरुद्ध दर्शनेछे, एटले सर्वदा ज्ञानदृष्टीरहितछो, मोहणिज्जेणकडेण कम्मुणा के० मोहनीयकर्मेकरी अथवा ज्ञानावरणादिक कर्मेकरी ताहरो दर्शन रुंधाणुछे तेमाटे तुं जैनमार्ग सर्द्दहतो नथी, माटे ए तारो मत मूकीने सूत्रना सत्यमार्गनी सर्द्दहणा कर ॥ ११ ॥ वली उपदेश कहेछे एवा वचननो बोलनार डुक्कीके० डुःखीछतो मोहेपुणोपुणो के० वली वली मोह पामे एटले वली तेनेज समाचरे जे थकी संसार मांहे अनंतो काल परिभ्रमण करे. एवुं जाणी मोह मूकीने जे संयमने विषे प्रवर्त्ते ते उत्तम पुरुष जाणवो, निव्विदेज्जसिलोगपूयणं के० ते आत्मश्लाघा स्तुति लोकपूजा तथा वस्त्रादिक लाभना उत्कर्षने न वांछे, एटले ए सर्वनो त्यागकरे. एवं के० ते एम करतो सहितेहिं के० ज्ञानादिक सहित थको संजए के० संयती पाणेहिं के० सर्व प्राणीमात्रने आयतुलंके० पोताना आत्मा तुल्यकरी पासएके० देखे. ए रीते दया पाले ॥ १२ ॥

---

दीपिका–एवं नास्तिकेनोक्तेसत्युत्तरमाह । (अदक्कवेति) पश्यतीतिपश्यः नपश्योऽपश्योंधस्त द्वदंधवत् हेअंधतुल्य पश्येन सर्वज्ञेन आख्यातं सर्वज्ञागमं श्रद्धस्व प्रमाणीकुरु । तथाऽपश्यकस्यासर्वज्ञस्याऽभ्युपगतं दर्शनं येन सोपश्यकदर्शनस्तस्यामंत्रणं हेऽपश्यकदर्शन प्रत्यक्षस्यैकस्य प्रमाणस्यांगीकारे व्यवहारलोपः स्यात् तस्मादागमं प्रमाणमिति । कस्मादेवमुपदिश्यतइत्याह । (हंदीत्यादि) हंदिएवंगृहाण । हुशब्दोवाक्यालंकारे । मोहनीयेन स्वकृतेन कर्मणा सुष्ठु निरुद्धमावृतं दर्शनं सम्यगवबोधोयस्य ससुनिरुद्धदर्शनः। एवंविधः प्राणी सर्वज्ञोक्तं मार्गं नश्रद्दधते तस्मादेवं बहूपदिश्यतेइति ॥ ११ ॥ (डुःखीति) डुःखी प्राणी पुनः पुनर्मोहंयाति डुःखेन विवेकविकलोभवति । निर्विवेकीच पुनर्डुःखी स्यात् तस्मान्मोहं परित्यज्य श्लोकमात्मश्लाघां पूजनं च निर्विद्येत जुगुप्सेत । परिहरेदित्यर्थः । एवमुक्तनीत्या सहहितेन वर्ततइति सहितोज्ञानादियुक्तोवा संयतः साधुः परैः प्राणिभिरा

तीत्यात्मदंडकाः । तथा एकांतेन लूषकाजंतूनां हिंसकास्ते पापलोकं नरकादिगतिं गंता रोयास्यंति चिररात्रं प्रनूतकालं तन्निवासिनोनवंति । तथा बालतपश्चरणादिना यद्यपि देवत्वप्राप्तिस्तथाप्यासुरींदिशं यांति किल्बिषिकादेवाऽधमाः स्युरित्यर्थः ॥ ए ॥ ( नयेति । नचनैव संस्कृतमायुस्त्रुटितमायुर्न संस्कर्तुं संधातुं शक्यमेवमाहुः सर्वज्ञाः । तथापिच एवं सत्यपि बालजनोमूर्खलोकः सावद्यं कृत्यं कुर्वन् प्रगल्नतेऽसदनुष्ठानेनापि नलज्जते । एवं पापकर्माणि कुर्वन् परेण प्रेरितोवक्ति । प्रत्युत्पन्नेन वर्तमानकालेनास्माकं कार्यं अतीतानागतयोर्विनष्टाऽनुत्पन्नत्वादसत्वं तस्मादिह लोकएव विद्यते नपरलोके । यतः । एतावानेव लोकोयं यावानिंद्रियगोचरः । नद्रे वृकपदं पश्य य द्वदंत्यबहुश्रुताइति ॥ १० ॥

---

॥ टीका—अपिच ( जेइहेत्यादि ) ये केचन महामोहाकुलितचेतसइहाऽस्मिन्मनुष्यलोके आरंने हिंसादिके सावद्यानुष्ठानरूपे निश्चयेन श्रिताः संबद्धाअध्युपपन्नास्ते आत्मानं दंडयंतीत्यात्मदंडकास्तथैकांतेनैव जंतूनां लूषकाहिंसकाः सदनुष्ठानस्य वा ध्वंसकास्ते एवंनूतागंतारोयास्यंति पापं लोकं पापकर्मकारिणां योलोकोनरकादिश्चिररात्रमिति प्रनूतं कालं तन्निवासिनोनवंति । तथा बालतपश्चरणादिना यद्यपि तथाविधदेवत्वापत्तिस्तथाऽप्यासुराणामियमासुरी तां दिशं यांति । अपरे प्रेष्याः किल्बिषिका देवाऽधमानवंतीत्यर्थः ॥ ए ॥ किंच ( णयसंखयेत्यादि ) नचनैव त्रुटितं जीवितमायुः संस्कर्तुं संधातुं शक्यते एवमाहुः सर्वज्ञाः । तथाहि दंमकलियं करित्तावच्चंति डुराइउयद्रिवसाय आउसंचेह्लंता गयाय पुणोनाणनियत्तंति । तथाऽप्येवमपि व्यवस्थिते जीवानामायुषि बालजनोऽन्योलोकोनिर्विवेकतया असदनुष्ठाने प्रवृत्तिं कुर्वन् प्रगल्नते धृष्टतां यात्यसदनुष्ठाने नाऽपि लज्जतइत्यर्थः । सचाऽन्योजनः पापानि कर्माणि कुर्वन् परेण चोदितोधृष्टतया अलीकपांडित्यानिमानेनेदमुत्तरमाह । प्रत्युत्पन्नेन वर्तमानकालनाविना परमार्थतोऽतीतानागतयोर्विनष्टानुत्पन्नत्वेनाऽविद्यमानत्वात् कार्यं प्रयोजनं प्रेक्षापूर्वकारिनिस्तदेव प्रयोजनसाधकत्वादाद्रीयते । एवंच सतीह लोकएव विद्यते नपरलोक इति दर्शयति । कः परलोकं दर्शयति कं परलोकं कोदृष्ट्वेहायातस्तथाचोचुः । पिब खादच साधु शोनने यदतीतं वरगात्रि तन्न ते । नहि नीरुगतं निवर्तते समुदयमात्रमिदं कलेवरं । तथा एतावानेव पुरुषोयावानिंद्रियगोचरः॥नद्रे वृकपदं पश्य य द्वदंत्यबहुश्रुताइति ॥ १०॥

अदक्खुव दक्खुवाहियं, सद्दहसु अदक्खुदंसणा॥हंदि हु सुनिरुद्ध
दंसणे, मोहणिज्जेण कडेण कम्मुणा॥ ११॥ डुक्की मोहे पुणोपुणो,
निव्विंदेज्जसि लोगपूयणं ॥ एवं सहिते हियासए, आयतुलं पा
णेहिं संजए ॥ १२ ॥

गारंपिअ आवसे नरे, अणुपुव्वं पाणेहिं संजए ॥ समता सव्वत्त सुव्वते, देवाणं गछे सलोगयं ॥ १३ ॥ सोच्चा नगवाणुसासणं सच्चे तत्थकरेज्जुवक्कमं ॥ सव्वत्त विणीयमछरे, उंछं भिक्खु विसुद्धमाहरे ॥ १४

अर्थ–वली उपदेशांतर कहेछे. गारंपिअआवसेनरे के० गृहवासने विषे वसतो एवो मनुष्य तेपण अणुपुव्वं के० अनुक्रमे धर्म सांजली, श्रावकना व्रतादिकने अंगीकार करी, पाणेहिं के० जीवोने विषे संजए के० सम्यक्प्रकारे यत्न करतो, समतासव्वत्तसुव्वते के० सर्वत्र समता परिणामे वर्त्ततो एवीरीते गृहस्थ धर्मने पालतो थको पण देवाणंगछेसलोगयंके० देवलोकमां जाय. तो पछी यतिधर्म पालनारनो केवोजकहुं ॥ १३ ॥ वली कहेछे सोच्चाजगवाणुसासणं के०ते श्रीवीतरागनी आज्ञापूर्वक धर्म सांजलीने सच्चेतछकरे ज्जुवक्कमंके० तेनां आगमने विषे जेम कह्युंछे. तेम सत्य संयमने विषे उपक्रम एटलेउद्यम करे, सव्वछविणीयमछरेके० सर्वत्र मछररहित एवो थको जिक्खु के० साधुते उंछं के० माधुकरी वृत्तियें विसुद्धमाहरे के० शुद्ध एटले बेतालीश दोष रहित एवो आहार लीये. ॥ १४ ॥

---

॥ दीपिका–किंच । ( गारंपीति ) अगारं गृहमप्यावसन् गृहस्थोपि नरआनुपूर्व्या चारित्रप्रतिपत्त्यादिरूपया प्राणिषु जीवेषु संयतोहिंसानिवृत्तः । यतः सर्वत्र समता श्रूयते । यतौ गृहस्थेच समतैव जिनमतेऽनिधीयते तां कुर्वन् गृहस्थोपि देवानां लोकं गछेत् किंपुनर्यतिरिति ॥ १३॥ ( सोच्चेति ) नगवदनुशासनं जिनागमं श्रुत्वा तडुक्ते सत्ये संयमे उपक्रमं उद्यमं कुर्यात् । किंनूतः सर्वत्र उपनीतमत्सरोऽरक्तद्विष्टः ( उंछंति ) नैक्ष्यं शुद्धं दोषरहितमाहरेद्गृएहीयात् ॥ १४ ॥ ॥ ॥ ॥ ॥ ॥

---

॥ टीका–किंच (गारंपियइत्यादि) । अगारमपि गृहमप्यावसन् गृहवासमपि कुर्वन् नरो मनुष्यः(आनुपूर्वमिति)आनुपूर्व्या श्रवणधर्मप्रतिपत्त्यादिलक्षणया प्राणिषु यथाशक्त्या सम्यक् यतः संयतस्तडपमर्दान्निवृत्तः । किमिति । यतः समता समजावः । आत्मपरतुल्यता सर्वत्र यतौ गृहस्थे च यदिचैकेंद्रियादौ श्रूयतेऽनिधीयते आर्हते प्रवचने तां च कुर्वन् सगृहस्थोऽपि सुव्रतः सन् देवानां पुरंदरादीनां लोकं स्थानं गछेत् किं पुनर्योमहासत्वतया पंचमहाव्रतधारी यतिरिति ॥ १३ ॥ अपिच । ( सोच्चाइत्यादि ) । ज्ञानैश्वर्यादिगुणसमन्वितस्य नगवतः सर्वज्ञस्य शासनमाज्ञामागमं श्रुत्वाऽधिगम्य तत्र तस्मिन्नागमे तडुक्तेवा संयमे सद्भ्योहिते सत्ये लघुकर्मा तडपक्रमं तत्प्राप्त्युपायं कुर्यात् । किंनूतः सर्वत्राऽपनीतोमत्सरोयेन सतथाऽसौरक्तद्विष्टः क्षेत्रवस्तूपधिशरीरनिष्पिपासः । तथा (उंछंति) नैक्ष्यं शुद्धं द्विचत्वारिंशद्दोषरहितमाहारं गृह्णीयादभ्यवहरेद्वेति ॥ १४ ॥

त्मतुलामात्मतुल्यत्वं पश्यन् यथाऽत्मनोदुःखमप्रियं सुखंच प्रियं एवं सर्वेपि प्राणिनईद्दशाएवेति ज्ञात्वा सर्वान् प्राणिनः पालयेदित्यर्थः ॥ १२ ॥

---

टीका–( अदक्कुवेत्यादि ) । पश्यतीति पश्योनपश्योऽपश्योंऽधस्तेन तुल्यं कार्याकार्याविवेचित्वादपश्यवत्तस्याऽऽमंत्रणं हेऽपश्यवदंधसदृश प्रत्यक्षस्यैवैकस्याऽन्युपगमेन कार्याकार्यानभिज्ञ पश्येन सर्वज्ञेन व्याह्रतमुक्तं सर्वज्ञागमं श्रद्धस्व प्रमाणीकुरु प्रत्यक्षस्यैवैकस्याऽन्युपगमेन समस्तव्यवहारविलोपेन हंत हतोसि पितृनिबंधनस्याऽपि व्यवहारस्याऽसिद्धेरिति । तथाऽपश्यकस्याऽपि सर्वज्ञस्याऽन्युपगमं दर्शनं येनासाऽवपश्यकदर्शनस्तस्याऽमंत्रणं वा हेऽपश्यकदर्शन स्वतोऽर्वाकुदर्शी नवांस्तथाविधदर्शनप्रमाणश्च सन् कार्याकार्यविवेचितयांऽधवदनविष्यत् यदिसर्वज्ञान्युपगमं नाऽकरिष्यत् यदिवाऽदक्षोवाऽनिपुणो वा यादृशस्तादृशोवाऽचक्षुदर्शनमस्याऽसावचक्षुदर्शनः केवलदर्शनः सर्वज्ञस्तस्माद्यदवाप्यते हितं तत् श्रद्धस्व । इदमुक्तं नवति । अनिपुणेन निपुणेन वा सर्वज्ञदर्शनोक्तं हितं श्रद्धातव्यं । यदि वा हे अदृष्ट हेअर्वाक्दर्शन दृष्टाऽतीताऽनागतव्यवहितसूक्ष्मपदार्थदर्शिना यद्व्याह्रतमनिहितमागमं तंश्रद्धस्व । हेअदृष्टदर्शन अदक्षदर्शन इतिवा असर्वज्ञोक्तशासनानुयायिन् तमात्मीयमाग्रहं परित्यज्य सर्वज्ञोक्तेमार्गे श्रद्धानं कुर्विति तात्पर्यार्थः । किमिति सर्वज्ञोक्ते मार्गे श्रद्धानमसुमान्नकरोति । येनैवमुपदिश्यते तन्निमित्तमाह । हंदीत्येवं गृहाण । दुशब्दोवाक्यालंकारे । सुष्ठु अतिशयेन निरुद्धमावृतं दर्शनं सम्यक् अवबोधरूपं यस्य सः केनेत्याह । मोहयतीति मोहनीयं मिथ्यादर्शनादिज्ञानावरणीयादिकं वा तेन कृतेन कर्मणा निरुद्धदर्शनः प्राणी सर्वज्ञोक्तं मार्गं नश्रद्दधते ऽतस्तन्मार्गेश्रद्धानं प्रति चोद्यते इति ॥ ११ ॥ पुनरप्युपदेशांतरमाह । ( दुःखीत्यादि ) दुःखमसातवेदनीयमुदयेन यत्प्राप्तं तत्कारणं वा दुःखयतीति दुःखं तदस्याऽस्तीति दुःखी सन् प्राणी पौनःपुन्येन मोहं याति सदसद्विवेकविकलोनवति । इदमुक्तंनवति । असातोदयात् दुःखमनुनवन्नार्तोमूढस्तत्करोति येन पुनः पुनः सुखी संसारसागरमनंतमस्येति तदेवंनूतं मोहं परित्यज्य सम्यगुत्थानेनोऽत्थाय निर्विद्येत जुगुप्सेत परिहरेदात्मश्लाघां स्तुतिरूपां तथा पूजनं वस्त्रादिलाभरूपं परिहरेत् । एवमनंतरोक्तरीत्या परिवर्त्तमानः सहहितेन वर्ततइति सहितोज्ञानादियुक्तोवा संयतः प्रव्राजितोऽपरप्राणिभिः सुखार्थिभिरात्मतुलामात्मतुल्यतां दुःखाप्रियत्वसुखप्रियत्वरूपामधिकं पश्येत् आत्मतुल्यान् सर्वानपि प्राणिनः पालयेदिति ॥ १२ ॥

रमजत्कष्टआयततोदीर्घः सर्वकालजवनात् मोक्षस्तेनाऽर्थिकस्तदजिलाषी पूर्वोक्तविशेषणविशिष्टोजवेदिति ॥ १५ ॥ पुनरप्युपदेशांतरमाह ( वित्तमित्यादि ) वित्तं धनधान्यहिरण्यादि । पशवः करितुरगगोमहिष्यादयोज्ञातयः स्वजनामातापितृपुत्रकलत्रादयः तदेतद्वित्तादिकं बालोऽज्ञः शरणं मन्यते । तदेव दर्शयति । ममैते वित्तपशुज्ञातयः परिजोगे उपयोक्ष्यंते । तेषु चाऽर्जनपालनसंरक्षणादिना शेषोपद्रवनिराकरणेन परिहारेणाऽहंजवामीत्येवं बालोमन्यते । न पुनर्जानीते यदर्थं धनमिहंति तच्छरीरमशाश्वतमिति । अपिच । रिद्धी सहावतरला, रोगजराजंगुरं हयशरीरं ॥ तथा मातापितृसहस्राणि पुत्रदारशतानि च । प्रतिजन्मनि वर्तंते कस्य माता पितापि वा ॥१॥ एतदेवाह । नोनैव वित्तादिकं संसारे कथमपि त्राणं जवति । नरकादौ पततोनापि रागादिनोऽपहृतस्य क्वचिच्छरणं विद्यतइति ॥१६॥

अप्नागमितंमि वा दुहे, अहवा उक्कमिते जवंतिए ॥ एगस्स गती
य आगती, विडमंता सरणं ण मन्नई ॥ १७ ॥ सव्वे सयकम्मक
प्पिया, अवियत्तेण दुहेण पाणिणो ॥ हिंमंति जयाउला सढा,
जाई जरा मरणेहिं जिहुता ॥ १८ ॥

अर्थ—वली उपदेश कही देखाडेछे. अप्नागमितंमिवादुहे के० पूर्वोपार्जित असाता वेदनीय कर्मना उदय थकी दुःख प्राप्त थयां छतां ते दुःख एकलोज जीव अनुजवेछे. पण ज्ञाति, स्वजन अथवा द्रव्य ते दुखः थकी मूकावी शकता नथी अहवाके० अथवा उक्कमितेजवंतिए के० मरण आवे छते पण एकलोज दुःख जोगवे तथा जवांतरने विषे पण एकलोज दुःख जोगवे तथा एगस्सगतीय आगती के० गति आगति पण एकलानेज होय, परंतु ते वखते धनादिक जे छे ते कोइ सरण न थाय विडमंता के० विवेकी पंमित जन एवी रीते जाणता थका सरणं णमन्नइ के० कोइनुं सरण करी माने नही ॥ १७ ॥ सव्वे के० संसारमांहे सर्व जीव सय के० पोताना करेला कम्म के० कर्मे करी कप्पिया के० एकेंद्रियादिकनी अवस्थाये कल्प्या छतां अवियत्तेणके० अव्यक्त संज्ञाये दुहेण के० अस्पष्ट शिरशूलादिक दुःखे करी दुःखीया छतां एवा पाणिणो के० प्राणीउ ते हिंमंति के० चतुर्गतिकरूप संसार मांहे अरहट्ट घटीने न्याये परिभ्रमण करेछे, ते ज योनीनेविषे जयाउला के० जयाकुल बिहीता थका तथा सढा के० शठ एटले अज्ञानी छता जाई जरामरणेहिं के० वली वली जाइ एटले जाति अने जरा तथा मरणे करी जिहुता के० पीडया थका रहेछे. ॥ १८ ॥

॥ दीपिका—(अप्नागमितंमिवेति) अन्यागते प्राप्ते दुःखेऽथवा उपक्रमकारणैरुपक्रांते क्षी

सवं नञ्चा अहिठिए, धम्मठी उवहाणवीरिए॥ गुत्ते जुत्ते सदाजये आय
परे परमायतठ्ठिते ॥ १५ ॥ वित्तं पसवोय नाईउ, तं बाले सरणं ति म
न्नइ ॥ एते मम तेसुवी अहं, नोताणं सरणं नविज्जई ॥ १६ ॥

अर्थ–वली उपदेश कहेछे ते साधु सवंके० सर्व हेय उपादेयवस्तुने नञ्चाके० जाणीने सर्व ज्ञोक्त संवररूप मार्गने अहिठ्ठिएके० अधितिष्ठेत् एटले आश्रये वली धम्मठीके० धर्मार्थी थको उवहाण के० उपधान एटले तपनेविषे वीरिएके० वीर्य फोरवे एटले तेमा बलवंत थाय पण तेमां वीर्य गोपवे नहीं वली गुत्तेजुत्ते के० मन वचन अने काय गुप्तिए गुप्त अने शुन्नयोगे युक्त थवानो सदा के० सर्वकाल आयपरे के० पोताने विषे अने परने विषे जयेके० यत्न करे परमायतठ्ठिते के०ते साधुपरमायतजे मोक्ष तेनो अर्थी जाणवो ॥ १५ ॥ वित्तं के० धनकनकादिक तथा पसवो के० पशु चतुष्पदादिक अने नाईउ के० ज्ञातिते स्वजन मातापितादिक तंके० तेनु बाले सरणंतिमन्नई के० जे बाल अज्ञानी होय ते सरणकरीमाने केवीरीते तोके एतेममतेसुवीअहं के० ए जेवित्तादिकछे ते माहाराछे हुं एनी रक्षा करनारछुं पण नोताणं सरणंनविज्जई के० एम न जाणे जे ए धनादिक जे छे, ते रोगादिक उपने थके अथवा डुर्गतिमां पडतां थका मने त्राणशरण नविद्यते एटले नथी. थवाना ॥ १६ ॥

---

॥ दीपिका–(सच्चमिति) सत्यमार्गमिमं ज्ञात्वाऽधितिष्ठेदाश्रयेत् । धर्मार्थी उपधानं तपस्त त्र वीर्यवान् मनोवाक्कायगुप्तोज्ञानादिन्निर्युक्तः सदा यतेत आत्मनि परस्मिंश्च । किंन्नूतः परमउत्कृष्टआयतोदीर्घोमोक्षस्तेनार्थिकस्तदन्निलाषी ॥ १५ ॥ (वित्तमिति) वित्तं ध नं पशवस्तुरगादयः ज्ञातयः स्वजनामात्रादयः तदेतद्बालोमूर्खः शरणमिति मन्यते । कथमित्याह । एते वित्तादयोमम मदीयाअहं तेषु वित्तादिषु रक्षाकरणेन प्रवर्ते एवं बालोमन्यते नत्वेवं वेत्ति यद्वित्तादिकं त्राणं नस्याद्दुर्गतौपततोनापिरोगादौ शरणं विद्य ते । रिद्धासहावतरला, रोगजरान्नंगुरं हयसरीरं ॥ दोएहंपि गमणसीला, णाकिच्चिरहोक्ष संबंधाइति ॥ १६ ॥

---

॥ टीका–किंच (सच्चंणच्चेत्यादि) सर्वमेतद्धेयमुपादेयं च ज्ञात्वा सर्वज्ञोक्तं सर्वसंव ररूपमधितिष्ठेत् आश्रयेत् । धर्मेणार्थोधर्मएव वाऽर्थः परमार्थताऽन्यस्याऽनर्थरूपत्वात् धर्मार्थः सविद्यते यस्याऽसौ धर्मार्थी धर्मप्रयोजनवान् । उपधानं तपस्तत्रवीर्यं यस्य स तथा अनिगूहितबलवीर्यइत्यर्थः । तथा मनोवाक्कायगुप्तः सुप्रणिहितयोगइत्यर्थः । तथा युक्तोज्ञानादिन्निः सदा सर्वकालं यतेताऽऽत्मनि परस्मिंश्च । किंविशिष्टः सन् अतआह । प

के० बोधबीज पामवुं सुलन नथी, ए रीते आहितं के० कह्युंछे. एवुं जाणी धर्म अण करवा थकी फरी फरी बोधि डुर्लनछे. एवं के० एरीते ज्ञान दर्शनेकरी सहिएके० सहित साधु जाणे तथा उदय आव्या परिसहने हियासए के० अहियाशे. ए वचन आदि जिणे के० श्री आदिनाथ नगवाने प्रकाश्यो तथा इणमेवसेसगा के० एरीतेज शेष बी जा तीर्थंकर पण प्रकाशेछे. ॥ १९ ॥ अनविंसुपुराविनिरकुवो के० हवे सर्वज्ञ पोता ना शिष्यने बोलावी कहेछे के, अहो निक्कु ? एटले यतिउ पूर्वे जे तीर्थंकर थया, त था आएसाविनवंति के० आगमिक काले जे थशे ते केवा थशे तो के सुवता के० सुव्रत एटले प्रधान व्रतधारी तेणे एयाइंगुणाइं आहुतेके० ए सर्व गुण जे पाछल कह्या ते अ थवा आगल कहेशे ते कह्याछे परंतु ते तीर्थंकरने मते नेद नथी कासवस्स के० काश्य प ते श्रीआदीश्वर तथा वर्द्धमान स्वामी तेना अणुधम्मचारिणो के० धर्मना अनुचारि जे छे ते एमज कहेछे के ज्ञान, दर्शन अने चारित्र एहिज मोक्षमार्ग छे. ॥ २० ॥

---

॥ दीपिका–(इणमिति) इमं प्रत्यक्षं क्षणमवसरं विज्ञाय ज्ञात्वा तथा वोधिं नोसुलनामि त्याख्यातां ज्ञात्वा तडुचितं विधेयं। ईदृशोमानुष्यार्यदेशधर्मसामग्र्याद्यवसरः पुनः सुलनोन स्यादिति नावः। तदेवमुत्कर्षतोपार्धपुजलपरावर्तकालेन पुनःसुडुर्लना वोधिरित्येवं ज्ञानादि सहितोऽधिपश्येत् बोधेर्डुर्लनत्वं पर्यालोचयेत्। पाठांतरंवा ( अहियासएत्ति ) परीषहानु दीर्णान् सम्यक् पश्येत् । एवं जिनः श्रीक्रुषनोष्टापदे स्वसुतानुद्दिश्याह कथितवान् । तथा शेषाअपि जिनाएवमेवोक्तवंतइति ॥ १९ ॥ ( अनविमिति ) हेनिक्षवः साधवः सर्व ज्ञाः स्वशिष्यानामंत्रयति । पुरा ये अनूवन् अतिक्रांताजिनाः (आएसत्ति) आगमिष्याश्च ये नविष्यंति जिनास्ते सर्वेपि सुव्रताः सुव्रतत्वेनैव सर्वे जिनत्वं प्राप्ताइत्यर्थः । ते सर्वे जिनाए तान् गुणानाहुरुक्तवंतः । नकश्चित्सर्वज्ञानां मतनेदइति नावः । येच काश्यपस्य क्रुषनस्वा मिनः श्रीवीरस्यवा सर्वेप्यनुचीर्णधर्मचारिणः । एतेन सम्यग्दर्शनज्ञानचारित्रात्मकएव मोक्षमार्गइत्यावेदितम् ॥ २० ॥

---

॥ टीका–किंच (इणमेइत्यादि) । इदमः प्रत्यक्षासन्नवाचित्वात् इमं इव्यक्षेत्रकालना वलक्षणं क्षणमवसरं ज्ञात्वा तडुचितं विधेयं । तथाहि । इव्यं जंगमत्वपंचेंड्रियत्वसुकु लोत्पत्तिमानुष्यलक्षणं। क्षेत्रमप्यार्य देशार्धषड्विंशतिजनपदलक्षणं । कालोऽप्यवसर्पिणी चतुर्थारकादिधर्मप्रतिपत्तियोग्यलक्षणः। नावश्च धर्मश्रवणतच्रद्धानचारित्राचरणकर्मक्षयो पशमाहितविरतिप्रतिपत्त्युत्साहलक्षणः। तदेवंविधं क्षणमवसरं परिज्ञाय तथा वोधिं च सम्यग्दर्शनावाप्तिलक्षणां नोसुलनामित्येवमाख्यातामवगम्य तदवाप्तौ तदनुरूपमेव कुर्या

णे आयुषि नवांते वा सति एकाक्येव डुःखमनुनवतीतिशेषः ॥ यतः सयणस्सविमज्झगउ, रोगानिदउकिलिस्सइइहेगो ॥ सयणोवियसेरोगं, नविरंचइनेव नासेइ इति ॥ तथाचाह । (एकस्सत्ति) एकस्यैव प्राणिनान्नवांतरे गतिरागतिश्च स्यात् ततोविद्वान् तावदीषदपि शरणं न मन्यते । यतः एकस्य जन्ममरणे गतयश्च शुनाशुनान्नवावर्ते ॥ तस्मादाकालिकहितमेकेनैवात्मनः कार्यमिति॥ १७॥(सवेत्ति) सर्वे प्राणिनः स्वकेन स्वकृतेन कर्मणा कल्पिताए केंड्रियादिन्नेदेन व्यवस्थिताः । तथा एकेंड्रियादिनवेषु अव्यक्तेन डुःखेन उन्नयलक्षणाव्यक्तेनापि डुःखेन समन्विताः प्राणिनोन्नयाकुलाः शवकर्मकारित्वात् शगाहिंडंति पर्यटंति तासुतासु योनिषु । किंनूताः प्राणिनः जातिजरामरणैरनिडुताः पीडिताः ॥ १८ ॥

---

॥ टीका-एतदेवाऽह । (अप्नागमितंमीत्यादि)। पूर्वोपात्ताऽसातवेदनीयोदये नाऽन्यागते डुःखे सत्येकाक्येव डुःखमनुनवति न ज्ञातिवर्गेण वित्तेन वा किंचित्क्रियते । तथाच । सयणस्सविमज्झगउरोगानिहतोकिलिस्सइइहेगो ॥ सयणोवियसेरोगं नविरंचइनेवनासेइ ॥ १ ॥ अथवोपक्रमकारणैरुपक्रांते स्वायुषि स्थितिक्षयेण वा नवांतरे नवांतिके वा मरणे समुपस्थिते सति एकस्यैवाऽसुमतोगतिरागतिश्च नवति । विद्वान् विवेकी यथावस्थितसंसारस्वन्नावस्य वेत्ता ईषदपि तावत् शरणं न मन्यते कुतः सर्वात्मना त्राणमिति । तथाहि । एकस्य जन्ममरणे गतयश्च शुनाशुनान्नवावर्ते । तस्मादाकालिकहित,मेकेनैवाऽत्मनः कार्यं ॥ १ ॥ एक्को करेइ कम्मं फलमवि तस्सिं क्कउसमणुहवइ । एक्को जायइ मरइ य परलोयं एक्कउजाइ ॥१॥१७॥ अन्यच्च । (सवेसयइत्यादि)। सर्वेपि संसारोदरविवरवर्तिनः प्राणिनः संसारे पर्यटंतः स्वकृतेन ज्ञानावरणीयादिना कर्मणा कल्पिताः सूक्ष्मबादरपर्याप्तकैकेंड्रियादिन्नेदेन व्यवस्थिताः। तथा तेनैव कर्मणैकेंड्रियाद्यवस्थायामव्यक्तेनाऽपरिस्फुटेन शिरःशूलाद्यलक्षितस्वन्नावेनोऽपलक्षणत्वात् प्रव्यक्तेन च डुःखेनाऽसातावेदनीयस्वन्नावेन समन्विताःप्राणिनःपर्यटंत्यरघट्टघटीन्यायेन तावत्स्वेव योनिषु नयाकुलाः शवकर्मकारित्वात् शगाच्रमंति जातिजरामरणैरनिडुतागर्नाधानादिन्निर्डुःखैःपीडिताइति १८

इणमेव खणं वियाणिया, णोसुलनं बोहिंच आहितं ॥ एवं स
हिए हिपासए, आहिजिणे इणमेव सेसगा ॥ १९ ॥ अन्नविंसु
पुरा विन्निक्खुवो, आएसावि नवंति सुवता ॥ एयाइं गुणाइं आ
हुते, कासवस्स अणुधम्मचारिणो ॥ २० ॥

अर्थ-इणमेव के० एहिज आर्य क्षेत्र सुकुमाल जन्म जिनधर्म प्रतिपत्तिरूप एवो खणंवियाणिया के० क्षण एटले अवसर जाणी यथोचित धर्म करवो णोसुलनंबोहिंच

मान स्वामी पाशेथी अमे सांनल्युं ने, तेरीते तमोने कहुंबुं ॥ २२ ॥ इति श्रीसूत्रकृतांगे प्रथमश्रुतस्कंधे श्रीद्वितीयवेतालीयाध्ययनं समाप्तं ॥

॥ दीपिका–( तिविहेणेति) त्रिविधेन मनोवाक्कायैः कृतकारितानुमतिनिर्वा प्राणिनो माहन्यात् । इदमाद्यव्रतं । उपलक्षणादन्यान्यपि व्रतानि ज्ञेयानि । तथा आत्महितोऽनिदानोनिदानरहितः संवृतएवंनूतः सिध्यतीत्याह । एवंनूताअनंतशः सिद्धाः संप्रति वर्तमानकालेपि सिद्धिगमनयोगे सिध्यंति । अपरे अनागते काले सेत्स्यंति । नान्योमुक्तिमार्गइत्यर्थः ॥ २१ ॥ ( एवमिति ) एवमुद्देशकत्रयोक्तनीत्या श्रीऋषनस्वामी स्वसुतानुद्दिश्य उदाहृतवान् कथितवान् । अनुत्तरमुत्कृष्टं ज्ञानं तदस्यास्तीत्यनुत्तरज्ञानी । एवमनुत्तरदर्शी । अनंतज्ञानदर्शनइत्यर्थः । बौद्धमतनिरासाय ज्ञानाधारंजीवं दर्शयति । अनुत्तरज्ञानदर्शनधरइति । कथंचिद्भिन्नज्ञानदर्शनाधारइत्यर्थः । अर्हन् सुरेंद्रादिपूज्योज्ञातपुत्रोवर्धमानस्वामी ऋषनस्वामीवा नगवान विशालानगर्यामाख्यातवान् श्रीवीरः । ऋषनस्वामीतु विशालकुलोद्भवत्वात् वैशालिकः ॥ यदुक्तं “ विशालाजननीयस्य, विशालकुलमेववा ॥ विशालं वचनं वास्यात्तेन वैशालिकोजिनः ” इतिब्रवीमीति पूर्ववत् ॥ ॥ २२ ॥ इति द्वितीयाध्ययनं समाप्तं ॥

॥ टीका–तदनिहितांश्च गुणानुद्देशतआह । ( तिविहेणेत्यादि ) । त्रिविधेन मनसा वाचा कायेन यदिवा कृतकारितानुमतिनिर्वा प्राणिनोदशविधप्राणनाजोमाहन्यादिति । प्रथममिद महाव्रतं । अस्य चोपलक्षणार्थत्वात् एवं शेषाण्यपि इष्टव्यानि । तथाऽऽत्मनेहित आत्महितः । तथानाऽस्य स्वर्गावास्यादिलक्षणनिदानमस्तीत्यनिदानः । तथेंद्रियनोइंद्रियैर्मनोवाक्कायैर्वा संवृतस्त्रिगुप्तिगुप्तइत्यर्थः । एवंनूतश्चावश्यं सिद्धिमवाप्नोतीत्येतद्दर्शयति । एवमनंतरोक्तमार्गानुष्ठानेनानंताः सिद्धाअशेषकर्मक्षयनाजः संवृत्ताविशिष्टस्थानजाऽजो वा । तथा संप्रति वर्तमाने काले सिद्धिगमनयोग्ये सिध्यंत्यऽपरेवाऽनागते काले एतन्मार्गानुष्ठायिनएव सेत्स्यंति । नाऽपरः सिद्धिमार्गोऽस्तीति नावार्थः ॥ २१ ॥ एतच्च सुधर्मस्वामी जंबूस्वामिप्रनृतिन्यः स्वशिष्येन्यः प्रतिपादयतीत्याह । ( एवंसेत्यादि ) । एवमुद्देशकत्रयानिहितनीत्या सऋषनस्वामी स्वपुत्रानुद्दिश्योदाहृतवान् प्रतिपादितवान् । नाऽस्योत्तरं प्रधानमस्तीत्यनुत्तरं । तच्च तज्ज्ञानंच अनुत्तरज्ञानं तदस्याऽस्तीत्यनुत्तरज्ञानी तथाऽनुत्तरदर्शी । सामान्यविशेषपरिछेदकाववोधस्वनावइति बौद्धमतनिरासद्वारेण ज्ञानाधारं जीवं दर्शयितुमाह । ( अनुत्तरज्ञानदर्शनधरइति ) । कथंचिद्भिन्नज्ञानदर्शनाधारइत्यर्थः । अर्हन् सुरेंद्रादिपूजार्होज्ञातपुत्रोवर्द्धमानस्वामी ऋषनस्वामी वा नगवानैश्वर्यादिगुणयुक्तोविशाल्यां नगर्यां वर्द्धमानोऽस्माकमाख्यातवान् ऋषनस्वामी वा । विशालकुलोद्भव

दितिशेषः। अकृतधर्माणां च पुनर्दुर्लना बोधिः। तथाहि। लध्देल्लियंच बोहिं अकरेंतो अ णागयंचपछंतो। अन्नं दाइं बोहिं लप्निसिकयरेण मोल्लेणं ॥ १ ॥ तदेवमुत्कृष्टतोपार्ध्दपुज लपरावर्तप्रमाणकालेन पुनः सुडलेना बोधिरित्येवं सहितोज्ञानादिनिरधिपश्येत्। बोधिसु डुर्लनत्वं पर्यालोचयेत्। पाठांतरंवा। (अहियासएत्ति) परीषहानुदीर्णान् सम्यगधिसहेत। एतच्चाह जिनोरागद्वेषजेता नानेयोऽष्टपदस्थान् सुतानुद्दिश्य। तथाऽन्येपि इदमेव शेष काजिनाअनिहितवंतइति ॥१९॥। एतदाह। (अनविंसुइत्यादि) हेनिक्षवः साधवः सर्वे ज्ञाः स्वशिष्यानेवमामंत्रयति। येऽनूवन् अतिक्रांताजिनाः सर्वज्ञाः (आएसावित्ति) आगमिष्याश्च नविष्यंति। तान् विशिनष्टि। सुव्रताः शोननव्रताः। अनेनेदमुक्तं नवति। तेषामपि जिनत्वं सुव्रतत्वादेवाऽऽयातमिति तेसर्वेऽप्येतानऽनंतरोदितान् गुणानाहुरनिहि तवंतः। नाऽत्र सर्वज्ञानां कश्चिन्मतनेदइत्युक्तं नवति। तेच काश्यपस्य रूपनस्वामिनो वर्ध्दमानस्वामिनो वा सर्वेऽप्यनुचीर्णधर्मचारिणइति। अनेन च सम्यग्दर्शनज्ञानचारित्रा त्मकएकएव मोक्षमार्गइत्यावेदितं नवतीति ॥ २० ॥

तिविहेणवि पाण माहणे, आयहिते अणियाण संवुमे॥ एवं सिद्धा अणं तसो, संपइ जे अणागयावरे॥ २१ ॥ एवं से उदाहु अणुत्तर नाणी अ णुत्तरदंसी अणुत्तरनाणदंसणधरे ॥ अरहा नायपुत्ते नगवं वेसालिए वि याहिएत्तिबेमि ॥ २२ ॥ इति श्रीवेयालियं द्वितीयमध्ययनं सम्मत्तं ॥

अर्थ—हवे ते गुण कहेछे. तिविहेणवि के० मन, वचन अने कायायें करण कराव ण अने अनुमोदने करी पाणमाहणे के० जीवना प्राण हणे नहीं. ए प्रथम महाव्र त एम उपलक्षण थकी शेष महाव्रत पण जाणवा. तेणेकरी आयहिते के० आत्माने हेतु तथा अणियाणके० नियाणा रहित संवुमेके० इंडियोने संवरवेकरी संवृतिथका एवं के० एवा आचारे प्रवर्तता सिद्धाअणंतसोके० आगल अनंताजीव सिद्धि पाम्या वली सं पइजेके० सांप्रत एटले वर्त्तमान काले सिद्ध थायछे. अने अणागयावरेके० अवर आगमि ककाले, अनेक सिद्ध थशे. ॥२१॥ एवंके० एरीते सेके० श्रीआदीश्वर नगवाने उदाहुके० पोताना पुत्र आश्री उद्देशीने मोक्षमार्गनो उद्देशो कह्यो ते नगवंत केवा छे? तोके अणुत्त रनाणीके० निरुपमज्ञान अने अणुत्तरदंसीके० निरुपम दर्शन एटले सम्यक् ज्ञान दर्शनना धरनार छे. तथा अणुत्तरनाणदंसणधरके० कथंचित् ज्ञान दर्शनना आधार छे एरीते अर हानायपुत्तेके० अरिहंत ज्ञातपुत्र श्रीवर्ध्दमान स्वामी नगवं के० नगवंत तेणे वेसालिएवि के० विशालानगरीने विषे ए मार्ग अमोने आहिएके० कह्यो तिबेमिके० एरीते पंचम गण धर श्रीसुधर्मस्वामी जंबुप्रनृति पोताना शिष्योने कहेछे के अहो शिष्यो? जेम श्रीवर्ध्द

तोयथा वसुदेवस्वसा माद्री दमघोषाय दत्ता । तयोः पुत्रः शिशुपालः मयौवनमदगर्वितोबलवान् चतुर्भुजश्च तं तादृशं दृष्ट्वा माता नैमित्तिकं पप्रच्छ । तेनोक्तं अयं तव पुत्रोऽजेयः समरे । यं दृष्ट्वास्य स्वाभाविकं भुजायुगलं भावि तस्मादस्य मृतिः । एवमन्य कियान कालोतिक्रांतः सकदाचित्कृष्णेन दृष्टस्तदा तस्य भुजायुगलमेव जातं । तदा तद्विदित्वा माद्री नाम्न्या तन्मात्रा कृष्णपितृष्वस्रा कृष्णाय निवेदितं । त्वं मत्पुत्रोपरि कृपां कुर्याः ।कृष्णेनोक्तं। अहं त्वत्सुतस्यापराधशतं सहिष्ये तदादेशात् । शिशुपालस्तु कृष्णं तृणमिव मन्यते । असन्यवचांसि वक्ति । बहूनपराधान् करोति ।अपराधशते पूर्णे मात्रादिभिर्निवार्यमाणोपि नतिष्ठति तदा कृष्णश्चक्रेण तदुत्तमांगं चिच्छेदेति ॥ १ ॥ सांप्रतं जनप्रतीतं दृष्टांतमाह । ( पयाइति ) । प्रकर्षेण पातः पादपातोयेपांते प्रपातारणशिरसि प्रयाताः प्रकर्षेण प्राप्तावा शूराः सुभटंमन्यास्ततः संग्रामे उपस्थिते प्राप्ते सति सर्वस्याकुलीभूतत्वान्माता पुत्रं न जानाति । एवंविधे रणे जेता कुंतादिभिः परिविक्षतः परि समंताद्विविधं क्षतोहतश्छिन्नोवा यथा कश्चिदल्पसत्वोभंगं याति दैन्यं भजतइत्यर्थः ॥ २ ॥

---

॥ टीका–उक्तं द्वितीयमध्ययनमधुना तृतीयमारभ्यते । अस्यचाऽयमभिसंबंधः । इहाऽनंतराध्ययने स्वसमयपरसमयप्ररूपणाऽभिहिता । तथा परसमयदोषान् स्वसमयगुणांश्च परिज्ञाय स्वसमये बोधोविधेयइत्येतच्चाऽभिहितं । तस्यच प्रतिबुद्धस्य सम्यगुत्थानेनोत्थितस्य सतः कदाचिदनुकूलप्रतिकूलोपसर्गाः प्रादुर्भवेयुस्तेचोदीर्णाः सम्यक् सोढव्याइत्येतदनेनाऽध्ययनेन प्रतिपाद्यते । ततोऽनेन संबंधेनाऽयातस्याऽस्याऽध्ययनस्य चत्वार्यनुयोगद्वाराणि भवंति । तत्रोपक्रमांतर्गतोर्थाधिकारोद्वेधा । अध्ययनार्थाधिकारउद्देशार्थाधिकारश्च । तत्राऽध्ययनार्थाधिकारः संबुद्धस्सुवसग्गाइत्यादिना प्रथमाध्ययने प्रतिपादितः । उद्देशार्थाऽधिकारं तूत्तरत्र स्वयमेव निर्युक्तिकारः प्रतिपादयिष्यतीति । नामनिष्पन्नंतु निक्षेपमधिकृत्य निर्युक्तिकृदाह । ( उवसग्गमित्यादि ) उवसग्गंमियछक्कं दव्वे चेयणमचेयणं डुविहं । आगंतुगोयपीला, करोयजोसोउवसग्गो ॥ १ ॥ नामस्थापनात् द्रव्यक्षेत्रकालभावभेदात् उपसर्गाः पोढा । तत्र नामस्थापने क्षुण्णत्वादनादृत्य द्रव्योपसर्गं दर्शयति । द्रव्ये द्रव्यविषये उपसर्गोद्वेधा । यतस्तद्द्रव्यमुपसर्गकर्तृ चेतनाचेतनभेदात् द्विविधं । तत्र तिर्यङ्मनुष्यादयः स्वावयवाभिघातेन यदुपसर्गयंति ससचित्तद्रव्योपसर्गः सएवकाष्ठादिभेतरः तत्त्वभेदपर्यायैर्व्याख्यातः । तत्रोपसर्गउपतापः शरीरपीडनोत्पादनमित्यादिपर्यायाः । भेदाश्च तिर्यङ्मनुष्योपसर्गादयः नामादयश्च । तत्र व्याख्यांतु निर्युक्तिकृदेव गाथापश्चार्द्धेन दर्शयति । अपरस्माद्दिव्यादेरागच्छतीत्यागंतुकोयोऽसावुपसर्गोभवति । सच देहस्य संयमस्य वा पीडाकारीति ॥ १ ॥ क्षेत्रोपसर्गानाह । खेत्तमित्यादिना । खेत्तं बहुओघपयं

त्वा द्वैशालिकः । तथाचोक्तं । विशाला जननी यस्य विशालं कुलमेव वा । विशालं वचनं चास्य तेन वैशालिकोजिनः । एवमसौ जिनआख्यातइति । इतिशब्दः परिसमाप्त्यर्थोब्रवीमीतिउक्तार्थोऽनया पूर्ववदिति ॥ २२॥ समाप्तंच द्वितीयं वैतालीयमध्ययनं ॥ ग्रंथाग्रं॥ १ ७ ६ ॥

हवे बीजो अध्ययन कह्या अनंतर त्रीजो अध्ययन प्रारंभियेछैए. एनो ए संबंधछे के, पाछले अध्ययने स्वसमय परसमयनी प्ररूपणा कही माटे परसमयना दोष अने स्वसमयना गुण जाणीने स्वसमयने विषे प्रवर्तवो; तेने विषे प्रवर्त्ततां थकां जे अनुकूल अने प्रतिकूल उपसर्ग उपजे ते सहन करवा ए अधिकारे आव्यो जे अध्ययन तेप्रारंभियें छैयें.

सूरं मस्सइ अप्पाणं, जावजेयं नपस्सती ॥ जुझंतं दढधम्माणं,
सिसुपालोव महारहं ॥ १ ॥ पयाता सूरा रणसीसे, संगामंमि
उवछिते ॥ माया पुत्तं नयाणाइ, जेएण परि विह्वए ॥ २ ॥

अर्थ—कोइएक बाल मनुष्य संग्रामने विषे अप्पाणंके० पोताने सूरंमस्सइके० शूरवीर करी माने जे आजगतमांहे माहारा समान सुजट कोइ नथी. परंतु जावजेयं के० ज्यां सुधी तेसंग्रामने विषे पोताने जीपनार कोइ नपस्सतीके० न देखे त्यांसुधी जाणवुं. कोनीपरे? सिसुपालोवके० जेम शिशुपालराजा पोतानी आत्माने शूरवीर मानतो हतो परंतु संग्रामने विषे दढधम्माणं के० दृढधर्मी तथा महारहं के० महारथी एवा नारायणने जुझंतं के० जुंजतो देखी, क्षोज पामी, मद छांमीने निर्मद थयो. ॥ १ ॥ सांप्रत सामान्यपदे दृष्टांत कहेछे. कोइएक पोतानेविषे सूरा के० शूरवीरपणुं मानता रण के० संग्रामने सीसे के० मस्तके अग्रेसर पणे पयाताके० आव्या; एवा संगामंमिउवछितेके० ते संग्रामनेविषे उपस्थित एटले प्राप्त थये थके त्यां परदलने सुजटे सर्वजनने व्याकुलचित्त कर्या छे. ते संग्राम एवो वर्त्तेछे के, ज्यां मायापुत्तंनयाणाइ के० माता पुत्रने न जाणे; एटले माताने केडे रह्यो बालक पडतो जाणे नहीं एवा संग्रामने विषे जेएण के० जे आगले जीपणहार पुरुषो तेणे परिविह्वए के० शस्त्रादिके करी छेद्यो थको, हत प्रहत कीधो छतो, कायरपणे जंग पामे. ॥ २ ॥

---

॥ दीपिका—उक्तं द्वितीयमध्ययनं । तत्र स्वसमये बोधोविधेयइत्युक्तं । तत्र प्रतिबुद्धस्य कदाचिडुपसर्गाः स्युस्तेच उदीर्णाः सम्यक्सोढव्याइत्यर्थः । अथ तृतीयाध्ययनमारज्यते । तत्र चत्वारउद्देशकास्तेषु प्रथमोद्देशकस्येदमादिसूत्रं । ( सूरंमस्सइत्ति ) कश्चिद्बालः संग्रामे आत्मानं शूरं सुजटं मन्यते शूरोहमिति गर्जति। यावज्जेतारं पुरःस्थितमुद्यतासिं नपश्यति।दृष्टांतमाह । युध्यमानं दृढः समर्थोधर्मः स्वजावोयस्यस तथातं । महान् रथोऽस्येति महारथोऽत्रनारायणस्तं दृष्ट्वा यथा शिशुपालोमाद्रीसुतः समर्थोपि क्षोजंगतस्तं दृष्टां

॥ ६ ॥ ( हेउइत्यादि ) चतुर्थोद्देशके अयमर्थाधिकारः । तद्यथा । हेतुसदृशैर्हेत्वा भासैरन्यतीर्थिकैर्व्युद्ग्राहिताः प्रतारितास्तेषां शीलस्खलितानां व्यामोहितानां प्रज्ञाप ना यथाव स्थितार्थप्ररूपणा स्वसमयप्रतीतैर्निपुणभणितैर्हेतुभिः कृतेति ॥ सांप्रतं सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं । तच्चेदं । ( सूरंमण्णइत्यादि ) । कश्चिल्लघुप्रकृतिः संग्रामे समुपस्थिते शूरमात्मानं मन्यते । निस्तोयांबुदइवात्मश्लाघाप्रवणोवाग्भिर्विस्फूर्जन् गर्जति । तद्यथा । नमत्कल्पः परानीके कश्चित् सुभटो ऽस्तीत्येवं तावद्गर्जति यावत् पुरोऽवस्थितं प्रोद्यतासिं जेतारं न पश्यति। तथा चोक्तं । तावद्गजः प्रस्रुतदानगंडः करोत्यकालांबुदगर्जितानि । यावन्न सिंहस्य गुहास्थलीषु लांगूलविस्फोटरवं शृणोति ॥ १ ॥ न दृष्टांतमंतरेण प्रायोलोकस्याऽर्थावगमोभवतीत्यतस्तद वगतये दृष्टांतमाह । यथा माद्रीसुतः शिशुपालोवासुदेवदर्शनात्प्राक् आत्मश्लाघाप्रधानं गर्जितवान् पश्चाच्च युध्यमानं शस्त्राणि व्यापारयंतं दृढः समर्थोधर्मः स्वभावः सं ग्रामाभंगरूपो यस्य सतथा तं महान् रथोऽस्येति महारथः सच प्रक्रमादत्रनाराय णस्तं युध्यमानं दृष्ट्वा प्राग्गर्जनाप्रधानोपि क्षोभं गतः। एवमुत्तरत्र दार्ष्टांतिकेऽपि योजनी यमिति । भावार्थस्तु कथानकादऽवसेयः । तच्चेदं । वसुदेवसुसाएसुउदमघोसणराहिवेणसु दीए । जाऊचउब्भुउब्भुजवलकलिउकलहपत्तंप्पो ॥१॥ दठ्ठूणतउजणणी, चउब्भुयपुत्तमब्भुय मणग्घं॥भयहरिसविम्हयमुही पुछइणेमत्तियंसहसा॥२॥णेमित्तिकएणसुणिऊणसाहियंतो इहठहियियाए॥जहएसतुज्झपुत्तोमहावलोऊकाउसमरे॥३॥ एयस्सनयजंदठ्ठूणहोइसाभावियं भुयाजुयलं॥ होहीतत्तोवियभयंसुतस्सतेणछिसंदेहो ॥४॥ भाविभयवेविरंगी पुत्तंदंमेइज्झा वकण्हस्स ।तावच्चियतस्सछियंपयइट्ठंवरभुयाजुगलं॥५॥ तोकण्हस्सपिउच्छापुनंपाडेइपाय पीढंमि॥ अवराहखामणंठंसोविसयंसेखमिस्सामि ॥५॥ सिसुवालोविहुजुव्वणमएण नारा यणंअसब्भेहिं ॥ वयणेहिंभणइसोविहुखमइखमाएसमत्थोवि ॥ ७ ॥ अवराहसएपुण्णेवारि ज्जंतोणचिठ्ठईजाहे। कण्हेणतउ छिन्नंचक्केणंउत्तमंगंसे ॥७॥ सांप्रतं सर्वजनप्रतीतं वार्तमानिकं दृष्टांतमाह । ( पयायाइत्यादि ) यथा वाग्भिर्विस्फूर्जतः प्रकर्षेण विकटपादपातं रणशिरसि संग्राममूर्धन्यग्रानीके याताःगताः। केते शूराः शूरंमन्याः सुभटाः । ततः संग्रामे समुपस्थिते पतत्परानीकसुभटमुक्तहेतिसंघाते सति तत्रच सर्वस्याऽऽकुलीभूतत्वात् माता पुत्रं न जानाति कटीतोभ्रश्यंतं स्तनंधयमपि न सम्यक् प्रतिजागर्तीत्येवं मातापुत्रीये संग्रामे परानीकसुभटेन जेत्रा च शक्त्यादिभिः परिसमंतात् विविधमनेकप्रकारं क्षतोहत श्छिन्नोवा यथा कश्चिदल्पसत्वोभंगमुपयाति दीनोभवतीति यावदिति ॥ २ ॥

कालोएगंतदूसमादीउ।नावेकम्मप्पुदउ,सो डुविहोउंघुवक्कमिउ॥२॥ यस्मिन् क्षेत्रे बहून्योघतः सामान्येन पदानि क्रूरचोराद्युपसर्गस्थानानि नवंति तत्क्षेत्रं बव्होघपदं। पाठांतरंवा बव्होघनयं बहून्योघतोनयस्थानानि यत्र तत्तथा । तच्च लाढादिविषयादिकं क्षेत्रमिति। कालस्त्वेकांतडुःषमादिः । आदिग्रहणात् योयस्मिन् क्षेत्रे डुःखोत्पादकोग्रीष्मादिः सगृह्यतइति । कर्मणां ज्ञानावरणादीनामन्युदयोनावोपसर्गइति । सच उपसर्गः सर्वोऽपि सामान्येन औघिकोपक्रमिकनेदात् द्विधा । तत्रौघिकोऽशुनकर्मप्रकृतिजनितनावोपसर्गोनवति । औपक्रमिकस्तु दंडकशशस्त्रादिनाऽसातवेदनीयोदयापादकइति । ॥ १ ॥ तत्रौघिकौपक्रमिकयोरुपसर्गयोरौपक्रमिकमधिकृत्याह । ( उवक्कमिउइत्यादि )। नवक्कमिउ संयमविग्घकरेतत्थुवक्कमेपगयं । दव्वे चउव्विहो देवमणुयतिरियायसंवेत्तो ॥ ॥ ३ ॥ नपक्रमणमुपक्रमः । कर्मणामनुदयप्राप्तानामुदयप्रापणमित्यर्थः । एतच्च यद्द्रव्योपयोगात् येन वा द्रव्येणाऽसातवेदनीयाद्यशुनं कर्मोदीर्यते । यडुदयाच्चाल्पसत्वस्य संयमविघातोनवति । अतऔपक्रमिकउपसर्गः संयमविघातकारीति। इहच यतीनां मोक्षं प्रति प्रवृत्तानां संयमोमोक्षांगं वर्तते तस्य योविघ्नहेतुः सएवाऽत्राऽधिक्रियतइति दर्शयति । तत्रौघिकौपक्रमिकयोरौपक्रमिके प्रकृतं प्रस्तावस्तेनात्राधिकारइतियावत् । सच द्रव्ये द्रव्यविषयश्चिंत्यमानश्चतुर्विधोनवति । तद्यथा । दैविकोमानुषस्तैरश्चआत्मसंवेदनश्चेति ॥३॥ सांप्रतमेतेषामेव नेदमाह। एक्केक्कोयेत्यादि। एक्केक्कोयचउविहो, अठविहोवाविसोलसविहोवा।घडणाजयणायतेसिं, एत्तोवोठ्ठंय अहियारो॥४॥ एकैकोदिव्यादिश्चतुर्विधश्चतुर्नेदः। तत्र दिव्यस्तावत् हास्यात् प्रद्वेषात् विमर्शात् पृथग्विमात्रातश्चेति। मानुषाअपि हास्यतः प्रद्वेषाद्विमर्शात् कुशीलप्रतिसेवनातश्च। तैरश्चाअपि चतुर्विधाः । तद्यथा । नयात्प्रद्वेषादाहारादपत्यसंरक्षणाच्च । आत्मासंवेदनाअपि चतुर्विधाः । तद्यथा । घट्टनातोलेशनातोऽगुल्याद्यवयवसंश्लेषरूपायास्तंननातः प्रपाताच्चेति । यदिवा वातपित्तश्लेष्मसंनिपातजनितश्चतुर्धेति । सएव दिव्यादिश्चतुर्विधोऽनुकूलप्रतिकूलनेदात् अष्टधा नवति । सएव दिव्यादिः प्रत्येकं यश्चतुर्धा प्राग्दर्शितः सचतुर्णां चतुष्कानां मेलापकात् षोडशनेदोनवति। तेषां चोपसर्गाणां यथा घटनासंबंधप्राप्तिः प्राप्तानांचाऽधिसहनं प्रतियातना नवति । तथाऽतऊर्ध्वमध्ययनेन वक्ष्यते इत्ययमत्रार्थाधिकारइतिनावः ॥४॥ नद्देशार्थाधिकारमधिकृत्याऽह ।(पढमंमीत्यादि ) पढमंमियपडिलोमा हुंतीअणुलोमगायवितियंमि।तइएअत्तविसीदणंयपरवादियणंच॥५॥ प्रथमे नद्देशके प्रतिलोमाः प्रतिकूलानपसर्गाः प्रतिपाद्यंतइति तथा द्वितीये ज्ञातिकृताः स्वजनापादिताअनुलोमाअनुकूलाइति । तथा तृतीये अध्यात्मविषीदनं परवादिवचनं चेत्ययमर्थाधिकारइति । हेउसरिसेहिंअहेउएहिं समयपडिएहिंणिउणेहिं । शीलखलितपण्णवणाकयाचउमि उद्देशे

तावच्छिशुपालवत् शूरं मन्यते यावज्जेतारमिव रूक्षं संयमं कर्म संश्लेषकारणा भावात् नसेवते नजानतइति । तत्प्राप्ता तु बहवोगुरुकर्माणोऽल्पसत्वाभंगमुपयांति ॥ ३ ॥ संयमस्य रूक्षत्वप्रतिपादनायाह । (जयाहेमंतेइत्यादि) । यदा कदाचित् हेमंत मासे पौषादौ शीतं सहिमकणवातं स्पृशति लगति तत्र तस्मिन्नसह्ये शीतस्पर्शे ल गतिसति एके मंदाजडागुरुकर्माणोविषीदंति दैन्यभावमुपयांति राज्यहीनाराज्यच्यु ताः यथा क्षत्रियाराजानइवेति ॥ ४ ॥

पुठे गिम्हाहि तावेणं, विमणे सुप्पिवासिए ॥ तत्थ मंदा विसियं
ति, मच्छा अप्पोदए जहा ॥ ५ ॥ सदादत्तेसणा डुक्खा, जायणा
डुप्पणोल्लिया ॥ कम्मत्ता डुब्भगा चेव, इच्चाहु सुपुठो जणा ॥ ६ ॥

अर्थ—हवे उष्णपरिसह कहेछे. गिम्हाहि के० ग्रीष्मकाले ज्येष्ठादिक मासनो उप न्यो तावेणं के० उष्ण आताप,तेणे करी पुठे के० फरश्यो एटले व्याप्यो छतो, विमणे के० विमन एटले आमण डुमणो थयो थको सप्पिवासिए के० अत्यंत तृषाये करी पराभव पाम्यो तेवारे तछमंदाविसीयंतिके० त्यां पण मंदवापडो कायर सिदाय.भंग पामे. जहा के० जेम मछाअप्पोदए के० माछलुं अल्पोदकमां एटले पाणीना वियोगथी सिदाय तेम सत्वरहित चारित्रियो संयम थकी भ्रष्ट थाय. जेम माछलां जीवितव्य थ की भ्रष्ट थाय तेनी पेरें जाणी लेवुं. ॥ ५ ॥ हवे याचना परिसह कहेछे. सदादत्तेस णाडुक्खा के० सर्वकाल शिलिमात्रपण साधुने दीधो अने एषणिय लेवो ए महाडुःखछे जायणा के० याचना एटले मागवुं ते डुप्पणोल्लियाके० अपार डुर्जनछे. तेमां जे काय र होय ते सिदाय. हवे पाछले अर्थे आक्रोश परिसह कहेछे. पुठोजणाके० पामर लो क होय ते साधुने इच्चाहंसु के० एम कहेके, कम्मत्ताके० ए वापडा पूर्वे आचरित कर्मे करी आर्त्त थका पूर्वकृत कर्मनां फल अनुभवेछे अथवा ए वापडा मलमलिन श रीर डुःखादिक वेदनाये ग्रसित दरिद्री करसणादिक कार्य करवा असमर्थ माटे उद्वेग पा म्याथका यति थयाछे ए पुत्र कलत्रादिके करी मूकायला, डुब्भगाचेव के० दौर्भागी थ का परिवार छांमी प्रवर्ज्या आदरी रहेछे. ॥ ६ ॥

---

॥ दीपिका—( पुठेति ) । ग्रीष्मेऽग्नितापस्तेन स्पृष्टोव्याप्तः सन् विमना विमनस्कः सु ष्टु अतिशयेन पिपासां तृषां प्राप्तः स्यात् । तत्रोक्तपरीषहे मंदाविषीदंति । यथा मत्स्या अल्पोदके विषीदंति ॥ ५ ॥ ( सदेति ) सदासर्वकालं दंतशोधनाद्यपि दत्तमेषणीयदो परहितं भोक्तव्यमिति दत्तैषणाडुःखं । तथा इयं याञ्चा डुःखेन प्राणोद्यते परीषहोडुर्ज

एवं सेहेवि अपुठे, निरका यरिया अकोविए ॥ सूरं मसंति अप्पाणं, जावलूहं नसेवए ॥ ३ ॥ जया हेमंतमासंमि, सीतं फुसइ सव्वगं, पाठांतरं सवायगं ॥ तब मंदा विसीयंति, रज्जहीणावि खत्तिया ॥ ४ ॥

अर्थ–हवे ए दृष्टांत साधु साथे मेलवे छे. एवं के० एम पूर्वोक्त सुनटनी पेरे शीशुपालवत् सेहेविके० नवदीक्षित शिष्य पण अपुठेके० परिसहने अण फरश्यो थको एम कहेके, दीक्षापालवामां शुं डुर्लनछे? एटले दीक्षानो मार्ग सुलनज छे. एवो ते निरकायरिया अकोविएके० निक्षाचर्याने विषे अकोविद, एटले अजाण, अनेरा आचारने विषे अनिपुण थको नवदीक्षितछे. ते सूरंमसंतिअप्पाणं के० वचन मात्रे करी पोताने विषे शूरपणानो माननार ते जावके० ज्यांलगे लूहके० संयमने नसेवए के० सेवे नही त्यांलगे एवुं कहे के, “ ए संयममां शुं डुष्करपणुं छे? ” परंतु जेवारे संयम आदरे तेवारे परिसहनो उदय आवे थके सिदाय. ॥ ३ ॥ हवे संयमनुं डुष्करपणुं देखाडेछे. जया के० त्यां एकदाकाले हेमंतमासंमि के० हेमंत ऋतुना पोष अने माघ मासमां सव्वगं के० सर्वांगे पाठांतरे सवायगं के० वायरासहित सीतंफुसति के० शीत फरसे तब के० तेवारे मंदाविके० मंदबुद्धि नारी कार्मिजीव कायर थको, चारित्रने विषे सीयंतिके० सिदाय एटले दीनपणुं पामे. कोनी पेरे? तोके, रज्जहीणावि खत्तिया के० जेम राज्यहीन क्षत्री सिदाय तेनी परे ते साधु पण जाणी लेवो. ॥ ४ ॥

---

॥ दीपिका–दार्ष्टांतिकमाह । ( एवमिति ) । एवं पूर्वोक्तप्रकारेण यथा शूरंमन्योजेतारं वासुदेवमन्यंवा युध्यमानं दृष्ट्वा नंगं याति । एवं शिष्यकोऽनिनवप्रव्रजितः परीषहैरस्पृष्टः प्रव्रज्यायां किंडुष्करमिति गर्जन् निक्षाचर्यायां निक्षाटनेऽकोविदोनिपुणः । उपलक्षणादन्यस्मिन्नपि साध्वाचारेऽनिपुणः सन्नात्मानं तावत् शिशुपालवत् शूरं मन्यते । यावज्जेतारमिव रूक्षं संयमं नसेवते नजजते । संयमप्राप्तौहि बहवोगुरुकर्माणोऽल्पसत्वान्नंगमुपयांतीति ॥३॥ संयमस्य रूक्षत्वमाह ।(जयेत्ति) यदा हेमंतमासे शीतकाले शीतं स्पृशति सर्वांगं।तत्र शीते मंदाविषीदंति दीनाः स्युः । राज्यहीना राज्यच्युतायथाक्षत्रियाराजानः॥४॥

---

॥ टीका–दार्ष्टांतिकमाह । ( एवंसेहेवीत्यादि ) । एवमिति प्रक्रांतपरामर्शार्थः । यथाऽसौ शूरंमन्यउत्कृष्टसिंहनादपूर्वकसंग्रामशिरस्युपस्थितः पश्चाज्जेतारं वासुदेवमन्यं वा युध्यमानं दृष्ट्वा दैन्यमुपयाति । एवं शिष्यकोऽनिनवप्रव्रजितः परीषहैरस्पृष्टोब्रुतः किंप्रव्रज्यायां डुष्करमित्येवं गर्जन् निक्षाचर्यायां निक्षाटनेऽकोविदोऽनिपुणः । उपलक्षणार्थत्वादन्यत्राऽपि साध्वाचारेऽनिनवप्रव्रजितत्वादप्रवीणः सएवंनूतआत्मानं

अर्थ–एतेसद्द के० एवा पूर्वोक्त आक्रोश संबंधि जे शब्द तेने सहन करवाने अचायंता के० असमर्थ गामेसु के० ग्रामने विषे, वाके० अथवा णगरेसु के० नगरने विषे तह्यके० त्यां एवा आक्रोश उपने थके मंदाविसीयंतिके० तेमंद अज्ञानी चारित्रिउ सीदायछे, कोनी परे सिदायछे ते कहेछे. संगामंमिवनीरुयाके० जेम बीकण मनुष्य संग्रामने विषे शस्त्र देखी सिदाइने नागी जाय, तेनी पेरे ते मंद चारित्रियो चारित्रथी नंग पामेछे. ॥७॥ हवे वध परिसह कहेछे. अप्प के० अपि संनावनाये एगे के० एक कोइ एक लूसक श्वानादिक ते खुधियंनिरकुं के० निक्षाये नमतो नूख्यो एवोजे साधु तेने देखी मुणी के० ते श्वानादिक मंसंतिके० मंख मारे. लूसए के०वलुरे तह्य के०त्यां श्वानादिके खाधो छतो मंदाविसीयंति के० अज्ञानी सिदाय एटले दीन थाय. कोनी परे, तोंक जेम तेउ के० अग्निने पुठाव के० स्पर्शे करी पाणिणो के० प्राणी एटले जीव पोतानुं शरीर संकोचें तेम मंद चारित्रिउ पण पोतानुं गात्र संकोचे. ॥ ८ ॥

---

॥ दीपिका–(एतेइति) एतान् पूर्वोक्तानाक्रोशशब्दान् सोढुमशक्नुवंतोग्रामनगरादौ स्थिताः। तत्राक्रोशे मंदा विषीदंति दैन्यंनजंते संयमाद्वा नश्यंति यथा नीरवः कातराः संग्रामेषु नज्यंते ॥७॥ वधपरीषहमाह (अप्पेगइति) अपिःसंनावने। एकः कश्चित् श्वादिर्लूषकः क्रूरोनक्षकः (खुधियमिति) क्षुधितं निक्षामटंतं निक्षुं दशति नक्षयति। तत्र श्वादिनक्षणे मंदाविषीदंति। यथा तेजसाग्निनास्पृष्टादह्यमानाः प्राणिनोवेदनार्ताः सीदंति ॥ ८ ॥

---

॥ टीका–( एएसद्दइत्यादि ) एतान पूर्वोक्तानाक्रोशरूपान् तथा चौरचारिकादिरूपान् शब्दान् सोढुमशक्नुवंतोग्रामनगरादौ तदंतराले वा व्यवस्थिताः। तत्र तस्मिन आक्रोशे सति मंदाअज्ञानलघुप्रकृतयोविषीदंति विमनस्कान्नवंति संयमाद्भ्रश्यंति। तथा नीरवः संग्रामे रणशिरसि चक्रकुंताऽसिशक्तिनाराचाकुले रटत्पटहशंखकल्लरीनादगंनीरे समाकुलाः संतः पौरुषं परित्यज्याऽयशःपटहमंगीकृत्य नज्यंते। एवमाक्रोशादिशब्दाकर्णनादऽल्पसत्वाः संयमे विषीदंति ॥ ७ ॥ वधपरीषहमधिकृत्याह। ( अप्पेगेइत्यादि )। अपिः संनावने। एकः कश्चिच्छ्वादिः लुपयतीतिलुपकः प्रकृत्यैवक्रूरोनक्षकः। खुधियंति। क्षुधितं बुभुक्षितं निक्षामटंतं निक्षुं दशति नक्षयति दशनैरंगावयवं विलुंपति। तत्र तस्मिन् श्वादिनक्षणे सति मंदाअज्ञाअल्पसत्वतया विषीदंति दैन्यं नजंते। यथा तेजसाऽग्निना संस्पृष्टादह्यमानाः प्राणिनोजंतवोवेदनार्त्ताः संतोविषीदंति गात्रं संकोचयंत्यार्तध्यानोपहतान्नवंति। एवं साधुरपि क्रूरसत्वैरनिद्रुतः संयमाद्भ्रश्यतइति दुःसहत्वाद्ग्रामकंटकानां ॥ ८ ॥

यइतिभावः । भिक्षाइ मुहलावसुं, वायाघोलेइकंठमझंमि । कहकहकरेइहियय, देहित्ति परं भणंतस्स ॥ १ ॥ गतिभ्रंशोमुखे दैन्यं गात्रस्वेदोविवर्णता । मरणे यानि चिन्हानि तानि चिन्हानि याचके ॥ २ ॥ एवं याञ्चापरिषहं परित्यज्य महापुरुषसेवितः पंथाः श्रयणीयः । आक्रोशपरिषहमाह । कम्मत्तत्ति । पृथक्जनाएवमाहुः सामान्यलोकाइत्नमुक्तवंतः । यथा एते यतयः कर्मभिः कृष्यादिभिरार्तास्तत्कर्तुमसमर्थाः संतोयतित्वं प्रतिपन्ना दुर्भगाः पुत्रदारादिनात्यक्तानिर्गतिकाः संतः प्रव्रज्यामाश्रिताइति ॥ ६ ॥

---

॥ टीका—उष्णपरीषहमधिकृत्याह । ( पुठेइत्यादि ) । ग्रीष्मे ज्येष्ठाषाढाख्ये अभितापस्तेन स्पृष्टश्छुप्तोव्याप्तः सन् विमनाविमनस्कः सुष्टुवा अतिशयेन पातुमिछा पिपासा तां प्राप्तोनितरां तृडभिभूतोबाहुल्येन दैन्यमुपयातीति दर्शयति । तत्र तस्मिन्नुष्णपरीषहोदये मंदाजडाअशक्ताविषीदंति पराभंगमुपयांति । दृष्टांतमाह । यथा मत्स्याअल्पोदके विषीदंति । गमनाभावान्मरणमुपयांत्येवं सत्वाभावात्संयमात् भ्रश्यंतइति । इदमुक्तं भवति । यथा मत्स्याअल्पत्वाउदकस्य ग्रीष्माभितापेन तप्ताअवसीदंत्येवमल्पसत्वाश्चारित्रप्रतिपत्तावपि जलमलक्लेदक्लिन्नगात्राबहिरुष्णाभितप्ताः शीतलान् जलाश्रयान् जलाधारगृहचंदनादीनुष्णप्रतिकारहेतूननुस्मरंतआकुलितचेतसः संयमानुष्ठानं प्रति विषीदंति ॥ ५ ॥ सांप्रतं याञ्चापरीषहमधिकृत्याह ( सदादत्तेइत्यादि ) यतीनां सदा सर्वदा दंतशोधनाद्यपि परेण दत्तमेषणीयमुत्पादाद्येषणादोषरहितमुपभोक्तव्यमित्यतः क्षुधादिवेदनार्त्तानां यावज्जीवं परदत्तैषणादुःखं भवति । अपि चेयं याञ्चापरीषहोल्पसत्वैर्दुःखेन प्रणोद्यते त्यज्यते । तथाचोक्तं । भिक्षाइमुहलावसुं, वायाघोलेइकंठमझंमि । कहकहकहेइहियय देहित्तिपरंभणंतस्स ॥ १ ॥ गतिभ्रंशोमुखे दैन्यं गात्रस्वेदोविवर्णता । मरणे यानि चिन्हानि तानि चिन्हानि याचके इत्यादि । एवं दुस्त्यजं याञ्चापरीषहं परित्यज्य गताभिमानामहासत्वाज्ञानाद्यभिवृध्दये महापुरुषसेवितं पंथानमनुव्रजंतीति श्लोकपश्चार्द्धेनाऽक्रोशपरीषहं दर्शयति । पृथक्जनाः प्राकृतपुरुषाअनार्यकल्पाइत्येवमाहुरित्येवमुक्तवंतः । तद्यथा । ये एते यतयः जलाविलदेहालुंचितशिरसः क्षुधादिवेदनाग्रस्तास्ते एतैः पूर्वाचरितैः कर्मभिरार्ताः पूर्वस्वकृतकर्मणः फलमनुभवंति । यदिवा कर्मभिः कृष्यादिभिरार्त्तास्तत्कर्तुमसमर्थाउद्विग्नाः संतोयतयः संवृत्ताइतितथैते दुर्भगाः सर्वेणैव पुत्रदारादिना परित्यक्ता निर्गतिकाः संतः प्रव्रज्यामभ्युपगताइति ॥ ६ ॥

एते सद्दे अचायंता, गामेसु णगरेसु वा ॥ तत्न मंदा विसीयंति,
संगामंमिव भीरुया ॥७॥ अप्पेगे खुधियं भिरकुं, सुणी डंसंति
लूसए ॥ तत्न मंदा विसीयंति, तेउ पुठाव पाणिणो ॥ ८ ॥

